# भारतमञ्जरी/स्वर्गपर्व

< भारतमञ्जरी

### स्वर्गपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।

देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १८.१ ॥

ततः स्वर्गश्रिया जुष्टं भ्राजिष्णुमुकुटाङ्गदम् ।

ददर्श शक्रसंकाशं कुरुराजं युधिष्ठिरः ॥ १८.२ ॥

तं वीक्ष्य सानुजं तत्र जातमन्युः शतक्रतुम् ।

उवाच स्वस्ति देवेभ्यः स्वर्गायास्त्वयमञ्जलिः ॥ १८.३ ॥

यत्र दुर्योधनः पापः पृथिवीक्षयकारणम् ।

सुमेरुकूटविकटे विभाति परमासने ॥ १८.४ ॥

न तत्र मम वासोऽस्ति व्रजाम्येष नमोऽस्तु ते ।

यत्र मे भ्रातरः शूरास्तत्र वासो ममाधुना ॥ १८.५ ॥

इति राज्ञो ब्रुवाणस्य देवदूतं सुरास्ततः ।

भ्रातॄन्प्रति प्रयाहीति प्राहुर्वायुमनोजवम् ॥ १८.६ ॥

स देवदूतादिष्टेन व्रजन्सपदि वर्त्मना ।

ददर्श पुरुषान्घोरान्नरकान्तरवर्तिनः ॥ १८.७ ॥

केशशोणितमांसासृग्वसासंघातपिच्छिले ।

प्रक्लिन्नानेककुणपव्याकीर्णकृमिसंकुले ॥ १८.८ ॥

काककङ्कबकोलूकवदनैरभितो वृते ।

शवदुर्गन्धनीरन्ध्रसंघट्टशतसंकुले ॥ १८.९ ॥

करपत्त्रशिलापाकसंतप्तसिकतातटे ।

लोहितैलवसाकुम्भकूटशल्मलिदारुणे ॥ १८.१० ॥

क्षुरकण्टककीलोग्रज्वालास्तम्भविभीषणे ।

तप्तवैतरणीविस्रपूयपूरितसैकते ॥ १८.११ ॥

असिपत्रवनोत्कृत्तनरनारीकृतस्वने ।

घोरान्धकारगहने तत्र शुश्राव धर्मजः ॥ १८.१२ ॥

पापिनां क्वाथ्यमानानामाक्रन्दं धृतिदारुणम् ।

क्षणमेकमितो राजन्मा निवर्तस्व शीतलैः ॥ १८.१३ ॥

त्वत्पुण्यवातैः स्पृष्टानामस्माकं बाधते तमः ।

वयं भीमप्रभृतयः पाण्डवा भ्रातरस्तव ॥ १८.१४ ॥

कृष्णा चेयं वरारोहा महिषी वल्लभा सती ।

श्रुत्वैतत्करुणं राजा वज्रेणेव विदारितः ॥ १८.१५ ॥

तत्रैव तस्थौ निर्द्वन्द्वो निन्दन्दुर्ललितं विधेः ।

सोऽवदद्व्रत देवानामविचारहतैव धीः ॥ १८.१६ ॥

यैरेत धर्मनिरताः क्लेशेऽस्मिन्समुपेक्षिताः ।

अयं मोहः प्रसादो वा विवेको नायमीदृशः ॥ १८.१७ ॥

विबुधानां न जानन्ति ये धर्मस्य व्यतिक्रमम् ।

भ्रमः स्वप्नोऽथ माયेयं किमेतदिति चिन्तयन् ॥ १८.१८ ॥

देवदूत न जानामि कस्येदं दुर्विचेष्टते ।

इहैवाहं स्थितो गच्छ न मे स्वर्गेण कारणम् ॥ १८.१९ ॥

पूज्यन्ते यत्र दुर्वृत्ता विशस्यन्ते नु साधवः ।

इत्युक्तो धर्मराजेन देवदूतः सुराधिपम् ॥ १८.२० ॥

गत्वा व्यजिज्ञपत्सर्वं स च तूष्णीं समाययौ ।

प्राप्ते सुराधिपे तत्र सह धर्मादिभिः सुरैः ॥ १८.२१ ॥

नादृश्यताशुभं किंचिद्ववौ पुण्यश्च मारुतः ।

ततोऽब्रवीत्सुरपतिर्विष्णं धर्मनन्दनम् ॥ १८.२२ ॥

असत्यमेतन्मायेयं मयैवेह प्रदर्शिता ।

एतदालोकनं राज्ञामवश्यं मिश्रकर्मणाम् ॥ १८.२३ ॥

असत्यलेशसंस्पर्शादेतद्द्रोणवधात्तव ।

एहि पश्य निजान्भ्रातॄन्दिव्यं स्वपदमाश्रितान् ॥ १८.२४ ॥

स्वर्गश्रियं च पाञ्चालीं पुत्रांश्चामरतां गतान् ।

इत्युक्ते देवराजेन वीतशोकी युधिष्ठिरः ॥ १८.२५ ॥

स्नात्वा धर्मगिरा स्वर्गगङ्गाम्भसि नभःप्रभे ।

उत्सृज्य मानुषं भावं पुण्यां सुरसभां ययौ ॥ १८.२६ ॥

अप्सरोनृत्तललितान्गायन्गान्धर्वकिंनरान् ।

तत्र स्वपदमारूढानपश्यदनुजान्निजान् ॥ १८.२७ ॥

मण्डले च रवेः कर्णं स्वयमिन्द्रेण दर्शितम् ।

अभिभन्युं च रुचिराकारनिर्जितमन्मथम् ॥ १८.२८ ॥

वर्चोभिधानं सोमस्य तं सुतं सोममण्डले ।

गन्धर्वराजं साक्षाच्च धृतराष्ट्रं जनेश्वरम् ॥ १८.२९ ॥

वसुं शान्तनवं भीष्मं गुरुं द्रोणं बृहस्पतिम् ।

नारायणं च विश्वेशं शङ्खचक्रगदाधरम् ॥ १८.३० ॥

यदंशा भुवि ये जातास्तांश्च दृष्ट्वा तदाश्रयान् ।

आससाद सदानन्दं वन्द्यं नन्दनवासिनाम् ।

धर्मसूनुर्निधिर्धाम्नां हरिश्चन्द्रोचितं पदम् ॥ १८.३१ ॥

अथ नहुषदिलीपधुन्धुमारसगरभगीरथरामकार्तवीर्यैः ।

नृपतिभिरभितोऽभिवन्द्यमानः सितचरितः स रराज राजचन्द्रः ॥ १८.३२ ॥

श्रुत्वेति भारतकथां वैशम्पायनकीर्तिताम् ।

संपन्नसर्पसत्रोऽभून्निर्वृत्तो जनमेजयः ॥ १८.३३ ॥

एतत्सूतेन कथितं नैमिषारण्यवासिनः ।

निशम्य शौनकमुखास्तस्थुरानन्दनिर्भराः ॥ १८.३४ ॥

**इति श्रीक्षेमेन्द्रविरचितायां भारतमञ्जर्यां स्वर्गपर्व**